# ऋग्वर्णक्रमलक्षणम्

केशरूपधरं विष्णुं नरसिंहो नमन् सुधीः
तनोति पूर्वशास्त्रोक्तमृग्वर्णक्रमलक्षणम्  १
पदक्रमविभागज्ञो वर्णक्रमविचक्षणः
स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंसदम्  २
तल्लक्षणं प्रातिशाख्याज्ज्ञेयं व्याकरणात्क्वचित्
द्वित्वं चाभिनिधानं च प्रतिषेधस्तयोः क्रमात्  ३
सोष्मणः पूर्वरूपं च सोष्मा पूर्वस्य चागमः
यमा यमनिषेधश्च विवृत्तिः स्वरभक्तयः  ४
नासिक्यानासिका वर्णा लुप्ताः प्राकृतवैकृताः
विसर्गजिह्वामूलीयावुपध्मानीय एव च  ५
अनुस्वारः कम्परङ्गौ ह्रस्वः प्लुतमिति क्रमात्
एते प्रायेण विज्ञेया वर्णक्रमविचक्षणैः  ६
स्वरानुस्वारपूर्वो हल् द्वित्वमाप्नोति हल्परः
शषसेभ्यश्च वर्गाद्यौ लात् स्पर्शा रहयोर्हलः  ७
संयुक्तोष्मा त्वनुपधो नङौ ह्रस्वात् स्वरेऽन्तगौ
अपदान्ते तु दीर्घाच्छो ह्रस्वाच्छो मात्परोऽपि वा  ८
सहातिहाययस्य द्वे तने च पवमान न
स्वरोष्मपर ऊष्मा च स्वसवर्णः क्रमोपधः  ९
वर्ग्ये परे न वर्गान्त्यः पदान्तव्यञ्जनं तथा

स्पर्शारिफयणः स्पर्शोऽनन्त्यस्पर्शा यणूष्मणोः १०
पदान्तेऽभिनिधानाख्या हल् विरामे यणो यणि
तृतीयभावादन्यत्र नादेशस्वसवर्णयोः ११
सोष्मणो द्वित्वसंप्राप्तौ तत्पूर्वः सकृदुच्यते
अपदान्ते द्वितीयः स्याद्वर्गप्रथम ऊष्मणि १२
ओष्ठ्यजातस्य कण्ठ्यस्य स्वरेऽनोष्ठ्ये व आगमः
नटयोः से तकारः स्यात् ङञयोः शरि शे कचौ १३
ङतयोर्ङधयोर्मध्ये पदमध्ये कगौ क्रमात्
पुरुपृथ्वधिशब्दानां पद्ये पूर्वपदस्य च १४
चन्द्रे परे शकारः स्यात् सकारस्त्वस्कृतोषसम्
परीति पद्ये कृपरेऽपद्ये कृण्वन्ति षः परे १५
तथा वनर्षदे रेफ आगमा एत एव हि
चत्वारः कादयो वर्ग्या वर्गान्त्येषु परेषु हि १६
स्पर्शाः प्रयान्ति यमतां सरूपां सानुनासिकाम्
प्रथमः प्रथमैर्योगे द्वितीयाद्यैस्तथा क्रमात् १७
न स्पर्शस्योष्मजातस्य यमापत्तिः कदाचन
चतुर्विधा विवृत्तिः सा संधिहीना स्वरान्तरा १८
ह्रस्वौ दीर्घौ ह्रस्वदीर्घौ दीर्घह्रस्वोभयौ क्रमात्
केचित् पाकवती ह्रस्वावुभौ दीर्घौ पिपीलिका १९
वत्सानुसार्यादिदीर्घा वत्सानुसृतिरन्तिमा

स्वरपूर्वस्य रेफस्य व्यञ्जने मध्यगा तयोः २०
ऋरूपा स्वरभक्तिः स्याल्लस्योष्मणि तथा भवेत्
द्राघीयस्यक्रमे ज्ञेया तदन्यत्र ह्रसीयसी २१
तस्या ऊष्मोदये वर्णभेदात् संज्ञापि पञ्चधा
रेफलाभ्यां हकारे स्यात् करेणुः कर्विणी क्रमात् २२
शसयोर्हरिणी रेफाल्लकाराद्धारिणी च शे
रेफात्परा हंसपदा षकारे जायते परे २३
यवले यवलादेशाः पदान्ते सानुनासिकाः
यमानुस्वारवर्गान्त्यभिन्ना निरनुनासिकाः २४
चित्कम्भनेन सो लुप्तः पीवो अन्नाँ रयिवृधः
दधन्वाँयो जुजुर्वाँ यो स्ववाँयातु दद्वाँवेति २५
आकारस्वरयोर्मध्ये लुप्तो नः पृच्यते पुनः
रथं रिणन्ति दिव्या च गावो गर्भं मृजन्ति च २६
वत्सं सखायः परतः ईमो मो लुप्तसंज्ञकः
तृतीयगोपाचरितनतादेशाश्च वैकृताः २७
तदन्ये प्राकृता ज्ञेया पदप्रकृतिजा अपि
विसर्गस्त्रिविधो लुप्तः प्राकृतो वैकृतस्त्विति २८
हल्येषसस्य परतो मध्यगः स्वररेफयोः
अघोषोदय ऊष्मान्त्यो विसर्गो लुप्तसंज्ञकः २९
पदपाठे विरामे च प्राकृतः शर्परे खयि

चतुरश्चक्रे चरति चिकित्वान् चमसांश्च चो ३०
च्यौत्नश्चरसि चित्परे नॄः पात्रं स्वतवाँ३पायुः
ताꣳस्ते सर्वाꣳस्ताꣳदेवाꣳस्त्वं ताꣳस्त्रायस्वावदꣳस्त्वं च३१
नॄँः पतिभ्यो नॄँः प्रणेत्रं नॄँः पाह्यादिषु वैकृतः
आद्यन्तवर्गजेऽघोषे विसर्गस्य परे क्रमात् ३२
ᳵकᳶपौ भवेतामूष्माणावनुपाचरितस्य तु
अनुस्वारो मस्य रे स्यादिङ्ग्यसम्राड्विनादिगे ३३
सर्वत्रोष्मोदये नस्य पदमध्ये तथा भवेत्
पदान्ते परिपन्नाख्यः पदमध्ये तु वैकृतः ३४
जात्याभिनिहितक्षैप्रप्रश्लिष्टाः कम्पभागिनः
स्वरितोच्चोदये ह्रस्वदीर्घरूपाश्च ते द्विधा ३५
पादाद्यचि सदा रङ्गः कण्ठ्यावेओपरौ लुशात्
एष्वन्तं मित्रयोरस्मन्नमस्युश्चर्षणीरीवत् ३६
चर्षणिभ्यो जोषमेभ्यः परमा पदमच्परम्
गौतमे चामिनन्तेति एवाँ अग्न्यत्रिमण्डले ३७
ऋपरा या कदा माता विभ्वा विधर्ता विपन्या
भीषा पथा परुच्छेपऋषावाद्यस्वरे परे ३८
रेफलोपोष्मभावश्च नस्य यत्र हि दृश्यते
तत्पूर्वस्य्स् स्वरस्यापि माँस्पमाँश्चत्वमँश्चतोः ३९
स्वराश्रयौ कम्परङ्गौ ह्रस्वदीर्घानुसारिणौ

ह्रस्वस्य दीर्घविधयः प्लुतं भीरिव विन्दति३ ४०
अधस्विदासी३दुपरिस्विदासी३च्च प्लुतत्रयम्
मेधातिथौ वरुणान्तव्रतान्तस्य परे यणि ४१
स्पर्शे वापि तयोर्ह्रस्वस्तथा मित्रा वयंपरा
आदित्यादेवावरुणासुराणां च भिषज्यथः ४२
पुरोहितिः सुप्रतीकं शवसा क्षत्रं दाशति
या निष्कृतं पदेष्वेमृकारे दीर्घकण्ठजः ४३
प्रायेण स्वरमात्रादिस्थानवर्णगुणा अपि
वर्णक्रमज्ञैर्वक्तव्याः संक्षिप्येदं प्रकाशितम्
वेदपारगपादाब्जनतेन विदुषां मुदे ४४

इति ऋग्वर्णक्रमलक्षणं समाप्तम्

Reference:
Krishnamacharya, Pandit V., *Ṛgvarṇakramalakṣaṇa of Narasiṁhasūri*, Adyar Library Pamphlet Series No. 35, Reprint from the Adyar Library Bulletin, Vol. XXIII, parts 1 and 2, 1959, Madras, India.